विषय - दर्शन पेज १-३५ 24.5 X 15 X 0.3

भेदस्य तत्त्वे वस्तुस्वरूपत्वे तद्वाराप्रतियोगिनामपि धर्म-

िमविनाभावः सम्बन्धः किं ~~वास्वाभिवि~~ वास्वभाविकः

सम्बन्धः वा निरुपाधिकः

चित्सुखी

अतिदूरात्सामीप्यादिन्द्रियघातान्मनोनव
स्थानात् सौक्ष्म्याद्व्यवधानादभिभवात्स
मानाभिहाराच्चेति सांख्यार्या २ गिरिशि
खरवर्त्तिनवीदौ १ लोचननिमीलनस्तिमि
तविन्द्वादौ २ अंधादेः ३ तीव्रदुःखोद्
दये ४ परमाण्वादौ ५ अपवरकान्तर्व
र्तिषु ६ नीराशयेनीरदस्त्यमानेषु ८
×नीरे×
×दिवादीपादौ ७×
समानाभिहारादिति समानैरभिहारोभि
भवः-
एतेषु यथावद्ग्रहणप्रतिबन्धो भवति चा
त्र दुग्धादिषु दध्यादेरनुद्भवादग्रहोपि-
नेन नानुपलब्धिमात्रादतीन्द्रियवस्त्वना
द्यपलाप इति- प्रतिबन्धे सति कार्यानुत्पा
दोन कारणानां विहन्तीति भावः-

सापेक्षत्वात्सावधेश्चत्वाद्वैतप्रसञ्जतः
राकाभावादसंदेहान्नस्वरूपं वस्तुनोभि
दा २ स्वरूपं=

सापेक्षप्रतीतित्वाद्भेदस्य वस्तुनो निरपेक्ष
प्रतीतित्वात् १ सावधेः सप्रतियोगिकस्य

भेदस्य तत्वे वस्तुस्वरूपत्वे तद्धूराप्रतियो
गिनामपिधर्मिस्वरूपत्वाद्द्वैतप्रसङ्ग
इति २ विचारणात्मकस्यभेदस्य तत्वे
वस्तुस्वरूपस्यातिविद्धीरीतयैकाभावात्त
न्निमित्तानेकाभावाच्च शून्यतापातात्
३ धर्मिणि द्दष्टएव तत्स्वरूपभेदोपि दृष्ट
इतिसंदेहेनस्यात् ४ उपलक्षणे चैत
द्विपर्य्ययस्यापि विशेषाग्रहनिबंधनो
दितो तद्ग्रहणेन स्यातामु इति- द्विविधं
वस्तूनां स्वरूपं स्वारसिकमन्यापेक्षंच तत्रान्या
मरणनमिश्राः किंभेदवस्तुनोरेकैकग्राह
कं प्रत्यक्षम् उतोभयग्राहकम् द्वि
तीयेपि युगपत्क्रमेणवा क्रमपक्षे
पि किंपूर्वं किमपरम्वा-

युगपद्ग्रहणायोगादनवस्थाप्रसं
गतः परस्पराश्रयत्वाच्च धर्मभेदे
पिनाक्षधीः १

युगपदिति धर्मिप्रतियोगिभेदानां युग
पद्ग्रहणायोगात् ... सुरभिचं
दनमित्यत्रयथा- विभिन्नेन्द्रियग्राह्य

केवलं स्पर्शभेदः न त्वक्षरितिकालिकत्वेन
न स्पृश्यते इति-

योः सौरभ्यचंदनयोरेकेन्द्रियाविषयत्वा
क्रमेण गृहीतयोरेव विशेषणविशेष्यभा
वश्चतीतिर निश्चेतव्यमुपेया-
-ग्रहधीः प्रत्यक्षप्रमाणम्

विशेषणं विशेष्यं च सम्बंधं लौकिकीं स्थि
तिम्- गृहीत्वा संकलय्यैतत्तथा प्रत्येति
नान्यथेति भट्टाः-
=विशेषणविशेष्ययोग्यतामित्यर्थः तेन च
संयोगस्य द्विष्ठत्वेपि दंडी पुरुष इतिव
त्पुरुषी दंडः इति न स्यात् =५=
=संकलनमेकीकारः सचैकज्ञानोपारो
हः =६=
नान्योन्याभावरूपोयं द्वैताभावप्रसङ्ग
तः तादात्म्यस्याप्यमानत्वात्प्रतियो
ग्यनिरूपणात् १
पक्षादुपाधिव्यावृत्त्या साध्यस्याविनिव
र्तनम् उपाधिफलमस्मिंस्तु समविषमः
द्वमः १
समासमाविनाभावाविति समसंबं
धः विषमसम्बन्धश्च-

२ स्वस्वस्वरूपशब्दौपर्यायौ-
लक्षणप्रतिकोशीमाकुरनवस्याहिदूषणमि
तिन्यायः-
सुरभिधूमेनचंदनलक्षणानुमानम्-
व्यतिरेके प्रकृतहेतुव्यतिरेकउपाधिरिति
लक्षणम्-
अव्याप्तेरप्यतिव्याप्तेर्द्वयंनेवकरण
त्रयः आद्येलक्षणगुणाभावात्कारण
त्वपिवीलक्षणात् १
लक्षणंहि केवलव्यतिरेक्यनुमानविशे
षः-
द्रव्यत्वजातियोगित्वमपिनद्रव्यल
क्षणम्- तज्जातिव्यञ्जकाभावात्त
ज्ञानस्यापिदूषणात् २
गुणत्वजातियोगोपिनभवेद्गुणलक्ष
णम् अन्योन्याश्रयदुष्टत्वाज्जाते
सद्व्यञ्जकस्यच ३
समवायिकारणप्रत्यासन्नमवधृतसामर्थ्य
मसमवायिकारणम् प्रत्यासत्तिश्चद्वि
विधा लघ्वीबृहतीच उत्पादेनकार्ये
णसहैकार्थकारणे स्वस्यय: समवाय:

साध्या यथा तन्तुसंयोगस्य तन्तुकार्यस्य प
टस्यचैकतन्तौ समवायः - तत्कारणेन सहै
कार्थे समवायो वृत्ती यथा पटगतशौ
क्ल्यासमवायिकारणस्य तन्तुशौक्ल्यस्य त
त्कारणेन पटेन सहैकत्र तन्तौ समवायः
- तदत्र संयोगं विभागं प्रति च समवायि
कारणे आत्मनि संयोगेन सह वर्त्तमान
स्यादृष्टस्यात्रिप्रत्यासत्तिरिति असमवा लघ्वी x
यिकारणं भवत्येवादृष्टमित्यर्थः -
वस्तुस्वरूपभेदः उतवस्तुधर्मो भेदः
आद्ये चौरापराधान्माण्डव्यनिग्रहन्या
यः -

अस्यार्थः चतुर्थपक्षे:

यथाश्रुतेऽसंभवित्वान्निरुक्तेरप्रयुक्ति
तः नानपेक्षतया हेतुः कर्म्मयोगविभा
गयोः १
उत्पन्नं द्रव्यं तत्क्षणमगुणं तिष्ठतीत्यत्रोपप
त्तिः कार्यस्य गुणस्य समवायिकारणं व
क्तव्यम् तच्चाश्रयभूतं द्रव्यमेवेति त
स्य गुणात्प्राक्क्षणवृत्तित्वं वक्तव्यम्
नियतप्राक्क्षणसत्त्वः कारणत्वादित्य

२ वयविषुगुणावत्त्वलक्षणं नास्तीत्यव्याप्तिः—
पिण्याक याचनार्थं गतस्य याचिनः
खारिकातैलदानं त्वाभ्युपगम इति
न्यायः—

क्रियावद्गुणवत्समवायिकारणं द्र
व्यमिति काश्यपसूत्रम्— जातमात्र
स्य तदभावात् तदत्यन्ताभावानधिक
रणस्य चात्यन्ताभावएवव्यभिचारात्
रूपादिगुणानामपि संख्यापृथक्त्वसम
कारण x वायित्वसम्भवात् अव्याप्त्यतिव्याप्ती
अस्मिन्सूत्रे—

अन्तगतत्वव्ययवेदनीयं हि सामान्यम्
द्रव्याश्रयोनगुणवान्संयोगविभागेष्व
कारणमनपेक्ष इति सूत्रे- गुणलक्ष
णपरम्—

सामान्यवानगुणइत्याद्यप्यस्य न लक्ष
णम् अन्योन्याश्रयतापत्तेर्गुणस्या
द्यासिद्धितः २

३

द्रव्यं हि संयोगविभागयोः समवायिकारणं कर्मत्वसमवायि-

संयोगविभागयोरपि संयोगविभागजनकत्वम् तथापि संयोगजनकत्वे सति विभागजनकत्वरूपोभयजनकत्वेन- संयोगस्य संयोगं प्रत्येव विभागस्य विभागं प्रत्येवासमवायिकारणत्वात् अजनकत्वे समवाय्यसमवायिरहितम्-

इष्टसंयोगानिष्टवियोगहेतौ धर्मे तद्विपरीतेऽधर्मे चाव्याप्तिः ननिमित्तमदृष्टं संयोगविभागसमवायिकारणे आत्मनि अदृष्टस्य कार्यैकार्थप्रत्यासत्त्याऽसमवायिकारणत्वात्-

रूपाद्यन्यतमत्वं गुण इति चेत् रूपादिज्ञाने तदन्यत्वज्ञानं तदन्यत्वज्ञाने रूपादिज्ञानमित्यन्योन्याश्रयः-

वादीन्द्रस्तु तदुभयान्यतरत्वं नाम एकान्योन्याभाववत्त्वे सति इतरान्योन्याभावानधिकरणमिति तथा सति रूपाद्यन्यतमत्वं नाम रूपान्योन्याभावाधि

४

करणत्वे सति रसादित्रयोविंशत्यन्योन्या
भावाधिकरणत्वरहितत्वमिति लक्षणा
र्थः स्यादिदं तु तथा च अन्योन्याभाव
द्वयानधिकरणत्वे रूपे रसस्य रसादौ
रूपस्यान्योन्याभावात्तत्राव्याप्तिः रूपे
रसस्य रसादौ रूपस्यान्योन्याभावो ना
स्तीति न शक्यं वक्तुम् - एकैकान्योन्या
भावानधिकरणत्वपक्षे तु रूपादिप्रति
योगिकाभावविशेषविवक्षायां रसादि
ष्वव्याप्तिस्तदवस्था - अनियतविव
क्षायां तु अनुगतलक्षणक्षय इति-
यथाश्रुतमिति तृ.प.प्र.पृ. नानपे
क्षतया संयोगविभागहेतुत्वं कर्मणः
समवायिकारणेऽपरेऽणुदेशकालादे
शापेक्षणात् यतः न्यायनये संयोगवि
भागयोरनपेक्षं कारणं कर्मेति लक्षणम्-
न च पश्चाद्भाविनिमित्तं नापेक्षते समवायि
कारणानां पूर्वभावित्वादिति वाच्यम् उत्त
रसंयोगे कर्तव्ये पश्चाद्भाविन्याः पूर्वसंयो
गनिवृत्तेरपेक्षणात् - न च पश्चाद्भावि भाव
रूपं निमित्तं नापेक्षत इति मन्तव्यम् य

स्मिन्क्षणे पूर्वसंयोगस्य नाशः सक्षणः कर्म
णः पश्चाद्भावी औपाधिकस्योत्पाद्यत्वाद्भा
वरूपश्च तदपेक्षत्वात्कर्मणः- अथय
दनंतरं संयोगविभागयोरुत्पत्तिस्तत्कर्मे
तिलक्षणमस्त्विति चेन्न तत्सामग्र्यामति
व्याप्तेः नच कर्मैव सामग्री तथा सति वि
भागोत्पत्तिसमसमयमेव पूर्वसंयोग
निवृत्तेरुत्तरसंयोगस्य चोत्पत्तिप्रसंगा
त् सत्यां सामग्र्यां कार्यविलम्बायोगात्
अतः पृथगेव सामग्री- अस्तु तर्हि सं
योगविभागयोरसमवायिकारणं क
र्मेति द्रव्यं समवायिकारणं ईश्वरेच्छा
दि निमित्तकारणम्- अस्योत्तरं पूर्वमुक्त
म् अद्रव्येति व्याप्तिरूपेम्-

स्वरूपसद्विशेषोस्ति सामान्यं नाम न
च प्रमेयत्वातिरिक्तं स्वरूपसत्त्वमस्ति रू
पैकार्थसमवायाच्चाक्षुषत्वमितरत्रापि तु
ल्यम् अभावत्वं च प्रमेयत्वादेः शपथसाध्य
म् इति-
प्रमेयत्वगुणवत्त्वसत्ताना धारत्वोपाधिभि
रेव यथायोग्यं सत् द्रव्यमात्मेति व्याहा

५ रव्यवहारोपपत्तौ तत्तत्सामान्यस्वीकारवैय
र्थ्यात्-

म असमवायिनाशात्समवायिनाशाद्वाऽव
यविनाश इति सिद्धान्तः-

व्यूहः अाकारः-

ननु किमिदं सामान्यम् किमनुवृत्तप्रत्य
यकारणम् उतानुवृत्तप्रत्ययप्रमाणक
म् २ अथानुवृत्तत्वम् ३ आहोस्विन्नि
त्यत्वे सत्यनुवृत्तत्वम् ४ अथवा नित्य
मेकमनेकसमवेतम् ५ तत्र
अतिव्याप्त्या निराकुर्यादाद्यं पक्षचतुष्ट
यम् अनेकत्वानिरुक्तेश्चापक्षमन्त्यं प्र
तिक्षिपेत् २ नाद्यः सामग्र्यां तदेकदे
शेष्वप्यतिव्याप्तेः तदेकदेशाधर्मादयः ६
देशासाधारणसाधारणकारणविवक्षयो
र्यथायथमुत्तरम्- न च विषयतयाकार
णं विशेषणीयम् गौरिति विशिष्टव्यव
हारे व्यक्तेरपि तथात्वापातात् न द्विती
यः अनुवृत्तप्रत्ययस्य सामान्यरूपं कार स्व
णानुमापकतया कारणस्यान्तप्रमाण
कत्वादतिव्याप्तेः सामान्यवत्सामग्री
कारणस्येति× ५

तदेकदेशांश्चानुमापयति, अनुवृत्तप्रत्य
यः न तृतीयः अनेकवृत्तिश्चेन्नवृत्तिः तस्याः
संयोगविभागद्वित्वादिष्वपि सत्त्वात् तत्रा
तिव्याप्तेः – न चतुर्थः नित्येष्वनेककार्य्य
वृत्तिषु व्यभिचारात् संयोगिनामपि वृत्तिर
स्त्येव इतरथा कुण्डेषु बदराणां वृत्त्यभा
वप्रसङ्गात् समवायेप्यतिव्याप्तिः अस्म
न्मते त्वविशेषणोपि पूर्वमुत्तरम्
अस्तु पञ्चमः समवेतशब्देन परमाण्वाका
शादिव्यावृत्तेः नित्यशब्देनैव संयोगादेरेक
पदेन चान्त्यविशेषव्यावृत्तेरिति – न पञ्च
मोपि विकल्पासहत्वात् तथाहि किम
नेकत्वसंख्याविशिष्टेषु समवेतत्वमने
कसमवेतत्वम् उत आश्रयप्रतियोगिका
न्योन्याभाववत्समवेतत्वम् आहोस्वि
त्स्वाश्रयप्रतियोगिकान्योन्याभावव
त्समवेतत्वम् न प्रथमः गुणकर्म
वृत्तिसामान्येष्वव्याप्तेः अनेकत्वेन
गुणकर्मणोः संख्यानधिकरणत्वात्
नापि द्वितीयः अन्त्यैर्विशेषैः परमाणु
ष्वेव व्यभिचारात् तेषामपि यत्कि

५ चिदाश्रयप्रतियोगिकान्योन्याभाववत्त्वे मवेतत्वात् . तृतीयः स्वशब्देन जा तिविवक्षाया मात्राश्रयत्वप्रसंगात् पूर्वोक्तातिव्याप्तेश्च-

:=अन्त्यैरिति अन्त्यविशेषरणमयार्थि वपरमाणुविशेषणानामीश्वरज्ञाना दीनां नित्यद्रव्यसमवेतैकत्वसंख्यापृ थक्त्वपरिमाणानामुपलक्षणम् तेषां नित्यत्वात्तदाश्रयाणां च यत्किंचिदाश्र यप्रतियोगिकान्योन्याभाववत्त्वादतो तिव्याप्तिः=

नित्यं सामान्यमित्यत्र किं नित्यत्व म् स्वप्रत्यनुपलक्षितसत्तायोगि

विनाशः=

त्वम्- प्रध्वंसप्रतियोगित्वानधिक रणत्वं वा- स्वप्रध्वंसप्रतियोगित्वान धिकरणत्वम्वा नाद्यः जातेर्ध्वंसान नधिकरणत्वेन लक्षणस्यासम्भवि त्वात् आत्मादिष्वतिव्याप्तेश्च तत्रव र्तमानसत्ताया अपि घटादिप्रत्यनु पलक्षितत्वात् एतेन स्वरूपसत्ताविव क्षापि प्रत्युक्ता- प्रमेयत्वरूपस्य

तस्य तस्यानुवृत्तस्य तथात्वात् इतरस्य
च व्यावृत्तस्यानुगतनित्यपदार्थत्वा
योगात् स्वत्रवृत्तीति विशेषणे चात्मा
श्रय इति दुष्टव्यम् द्वितीये प्रध्वंसनि
रूपकत्वम् किंवा प्रध्वंसासहावस्थि
तत्वम् - नाद्यः जातेर्ध्वंसो न्य इत्यत्र
जातेरपि ध्वंसनिरूपकत्वात् न चा
न्यत्वं प्रत्येवन तदिति वाच्यम् सतो घट
स्य ध्वंस इत्यादौ विशेषणतयातस्या
प्यापित्त्वात् स्वरूपभेदवादिनां जा
तिभेदस्यापि भावाच्च न द्वितीयः
सत्ताद्रव्यत्वपृथिवीत्वानां घटध्वंसेन
सह पृथिव्यामवस्थानात् - यद्यपि क
पाले सामानाधिकरण्यमपि तथापि
तन्त्वादिरूपपृथिव्यादौ तदभावादस
मानाधिकरणत्वानधिकरणत्वेना
स्तीत्यर्थः यत्किञ्चित्प्रध्वंसावृत्तियो
गित्वं संयोगादेरप्यस्तीति तत्र लक्षण
स्यातिव्याप्तिरित्यपि दुष्टव्यम् नापि
तृतीयः जातिप्रध्वंसस्यैवाप्रसिद्धत्

यातत्रितयोनित्यत्वस्याप्रसिद्धेः ननुतथा
पित्रितयाणां नित्यत्वंसिद्धं तत्किंमानाव
पलपसि मेवम् तस्यनिर्धर्मितयानि
त्यत्वधर्मानधिकरणत्वात् कथंतर्हि
आकाशवत्सर्वगतश्चनित्य इत्यादिश्रु
तौ नित्यत्वव्यपदेश इतिचेद्दुर्निरूप
विनाशत्वात् ननुघटादेरपि विनाशो
दुर्निरूपः सत्यम् रज्जुसर्पवत्स्वरू
पेणापि घटादेर्विनाशो दुर्निरूपत्वा
त् ब्रह्मणस्तु स्वरूपेणापि परमार्थत्वा
द्दुर्निरूपविनाशत्वलक्षणनित्यत्वव्य
पदेशः तथाचस्वरूपेणपरमार्थत्वेस
तिदुर्निरूपविनाशत्वंनित्यत्वमिति-
त्वंपुनः सामान्यादित्रयाणां स्वात्मस
त्त्वं बुद्धिलक्षणत्वं अकार्यत्वमकार
णत्वं असामान्यविशेषवत्त्वं नित्यत्वं
अर्थशब्दाभिधेयत्वं चेति प्रशस्तपाद
भाष्यान्नित्यत्वसाधर्म्यमिच्छति-
स्वात्मसत्त्वं स्वरूपसत्त्वं - बुद्धीति बु
द्धिभिर्ज्ञानैर्लक्ष्यत्वं अनुवृत्तप्रत्य

यकारणं सामान्यं अत्यन्तव्यावृत्तिबुद्धि
हेतवः अन्त्याविशेषाः - इहप्रत्ययहे
तुः समवायः अकारणत्वं वा नातग
णकार्य्यं प्रति तत्र च नित्यत्वं साधर्म्यम
भिप्रेतम् तच्च समानो धर्मः
शिवादित्यमिश्रस्तु मनस्त्वात्मत्वाति
रिक्तानित्यभागसमवेतान्यत्वे सति स
मवेतं सत्तानाश्रयः सामान्यमिति वि
शेषव्यावृत्तये नित्येति अभावसमवा
ययोर्व्यावृत्तये समवेतमिति द्रव्यादि
त्रिकवारणाय सत्तानाश्रय इति - तन्न
जातेरद्याप्यसिद्धेः सत्तादेरप्य
सिद्धिः - तदनाश्रयत्वान्यत्व
लक्षणेऽन्योन्याश्रयः २
ननु सत्तादीनां जातिभेदत्वं न तेषां सामा
न्यत्वानधीननिरूपणमतो नान्यो
न्याश्रय अत्राह घटवृत्तिवृत्ति चेस
त्यात्मवृत्तिजातिः सत्तेति परैरभ्युपे
यते अत्रमातित्यागे भावः धर्मवि
शेषो वा कश्चिदिति लक्षणमस्तु

तेन नान्योन्याश्रय इति गुणत्वादाव
तिव्याप्तिवारणायात्मवृत्तीति तथाप्या
त्मत्वेतिव्याप्तिरत उक्तं घटवृत्तीति त
थापि द्रव्यत्वेतिव्याप्तिस्तद्व्यावृत्त्यर्थं घ
टवृत्तिवृत्तीति घटवृत्तीये गुणकर्म
णी तद्वृत्तिरित्यर्थः
तत्राह धर्ममात्रत्वे घटवृत्तिरूपादेराम
नश्चान्योन्याभावेतिव्याप्तिः भेदमात्र
त्वे चापरजातिमत्त्वलक्षणे धर्मे गुणकर्म
णोरात्मनि च वर्त्तमानेतिव्याप्तिः अतः
परिशेषादेवं विशेषिता जातिः सत्तेति
वाच्यम् कथं नान्योन्याश्रयः यथाह
विशेषणं विशेष्यं च तत्सम्बन्धफला
त्मकम्- ज्ञानरूपं स्वसामर्थ्याद्वैशिष्ट्य
मिति कीर्त्यत इति आत्मत्वमनस्त्वाति
रिक्तांशेप्यन्योन्याश्रयमाह
आत्मत्वमनस्त्वलक्षणेच तत्रापिहि घटा
वृत्तित्वे सत्यात्मनिष्ठात्यन्ताभावप्रतियोगि
नी जातिरात्मत्वम्- सत्ताद्रव्यत्वयोरति
व्याप्तिवारणाय घटावृत्तीति उक्तञ्च

17

सोहि भावः स्वभावः असाधारणाइतिया
वत् वीजस्यजनकत्वं स्वभाव उतजन
कत्वमजनकत्वञ्चाद्यो ह्यविद् जनक
त्वमेव आद्ये सहकार्य्यसमवधाने
पिस्वभावविरोधादेवाजनकत्वानुपप
त्तिः द्वितीये सहकारिसमवधानेज
नकत्वमन्यदानेत्यात्मके एकस्या
नेकस्वभावतानुपपत्तिः किञ्च यु
गपदुभयंस्वभावभूतं पर्यायेणवा
नाद्यः भवदुक्तसहकारिसमवधान
व्यवस्थानुपपत्तेः नित्यंकार्यसत्वा
सत्त्वयोः प्रसङ्गाच्च नद्वितीयः तस्मो
भयत्रानुगच्छतोपि तयोरननुगमात्
यदिसहकारिसमवधानमपिस्वभावे
नाभूतं तदातदपितदैवसम्पद्येत
स्वभावस्यानपायात् तृतीयेतु कदा
पिनाङ्कुरंजनयेत् अथसहकारि
समवधानानन्तरभाविनः कार्य्यात्
समनन्तरपूर्वक्षणावर्त्तित्वं स्वभावः
तेनसहकारिसमवधानाभावेपिन

५४

जनकत्वम् नापिसहकारिसमवधाने
प्यजनकत्वमितिचेत् कुसूलनिहि
तावस्थायामपिकार्यजन्मप्रसङ्गात्
अन्यथास्वभावपरित्यागप्रसङ्गात्
अथयदि सहकारिसमवधानं स्वभा
वस्तर्हितत्कारणस्योपकरोति नवा
अन्त्येनापेक्षणीयंतत् आद्ये उपका
रोवस्तुनोभिन्नोनवा आद्येऽन्वयव्य
तिरेकाभ्यां तस्यैवकारणत्वंस्यान्नव
स्तुनः स्थिरस्य द्वितीये किंवस्तुनः
उपकारादभेदः उपकारस्यवावस्तुनो
ऽभेदः आद्ये उपकारः खल्विदानीमुत्प
द्यते पूर्वसिद्धस्यववस्तुनस्तदभेदेत
स्यैवपुनरुत्पत्तिः प्रसज्येत तच्चायुक्तम्
द्विरुत्पत्त्यभावात् अतोन्यस्यैवोत्पत्ति
र्वक्तव्या तथाच कथयकथंनक्षणि
कस्यकारणतापत्तिः द्वितीये उपका
रस्यवस्तुभिन्नत्वे सहकारिसमवधा
नात्पूर्वमपितद्भावात्तदापिकार्यज
ननं समवधानवैयर्थ्यंचस्यात्-

×सहकारि×

समवधानं मेलकम्=१

अथोपकारो वस्तुनो भेदाभेदाभ्यामनिर्व
चनीयः तदानस्यैवकारणत्वमस्तु तथा
च क्षणिकस्यकारणत्वेदुरपवादम् वस्तु
नश्चाकारणतापत्तिरित्यतिरिच्यते नोभि
न्नपक्षात्फलतो भेदः नचवस्तुनोऽप्यन्वय
व्यतिरेकित्वात्कारणता केवलव्यति
रेकाभावात् यथाहि वीजे विद्यमानेऽप्युपका
राभावादनुत्पत्तिमभ्युपैषि नतथोपका
रे विद्यमाने वस्तुनोऽभावादनुत्पत्तिः प्रा
क्प्रनिदर्शिता अभेदवादिनो व्याघातात्
भेदवादेऽप्युपकार्याभावउपकारस्यैवास
म्भवात् अनिर्वचनीये पूर्वोक्तदोषात्
अजनकत्वादसामर्थ्यमपसूतमि
तिस्थितम्-
प्रयोगश्च कुसूलस्थंवीजं सहकारिम
ध्यमध्यासीना वीजाद्भिन्नं विरुद्धधर्म
संसृष्टत्वाद्दहनतुहिनवत् तथा कुसू
लस्थंवीजमङ्कुरजननवीजाद्भिन्नं कार्या
व्यवहितातीतक्षणातिरिक्तक्षणसम्बन्धि
त्वाद्घटवत् एतामेव व्याप्तिमुपजीव्य
यत्सत्तत्क्षणिकमिति वदन्ति क्षणभंगवा

२०

९

दिनः नचप्रत्यभिज्ञाविरोधः सोयमि
त्यत्रज्ञानद्वये अतऽमुद्राहमुग्धयोभिन्नः
प्रत्यार्थनमिव वालुकावह्निप्राकाश्लि
नयोरैक्यानवगाहित्वात् ज्ञानैक्येन
सामग्रीभेदः सइत्यंशे संस्काराद्येव
सामग्री अयमित्यंशे संप्रयोगादेः त
थापारोक्ष्यमपारोक्ष्यंचेति नयाचसा
मग्रीभेदाद्विरुद्धधर्माध्यासाच्च प्रत्य
भिज्ञानंनैकमिति उभयोः सम्भूयका
रणतानुपपत्तेः ज्ञानभेदात्प्रत्यभिज्ञा
याः प्रत्यक्षत्वाभावात् नचकृतानुमा
नस्य प्रत्यक्षविरोधः पारोक्ष्यापारोक्ष्य
धर्म विरुद्धधर्म्मस्यस्फुटमुपलम्भा
त्- सहकारिविरहकाले सोऽसन्नाच
समर्थ इति क्षणभंगवादिनः -
तत्रस्थायी विकल्प्यते तत्कालेयेयमस
द्रूपता सासहकारिसन्निधानकालेवि
द्यतेनवा आद्येस्वकालेएवासत्त्वप्रस
ङ्गः द्वितीये नतर्हि सहकारिविरहका
ले तदसद्रूपमसद्रूपाभावेप्यस्यभावा

संस्कार निरपेक्षे

इन्द्रिय निरपेक्षे

त् पूर्वासिद्धस्य वस्तुनः पश्चाद्भाव्यसत्त्वं
न स्वभावः सत्त्वावस्थायाः पूर्वमपि व
स्तुनो विद्यमानत्वात् इति तावद्व्यर्थम्
स्थायित्वादिनामनेन समर्थमपि सह
कारिवैकल्येन जनकमिति स्थितिः
क्षितिपवनतेजः पाथसां सहकारिणां
न जनकत्वं किन्तूपकारकत्वमेव-
किमिदं कारणकत्वम् कारणसम्बं
धित्वम् १ कारणान्तरासम्बन्धित्वे स
ति कारणसम्बन्धित्वम् वा २ कारणान्त
रभावासम्बन्धित्वे सति कारणसम्बन्धि
त्वम्वा ३ उत्पत्तिकारणसत्त्वम्वा ४ स्वो
त्पत्तिकारणसत्त्वम्वा ५ स्वोत्पत्तिकार
मात्रसत्त्वम्वा ६ = स्वशब्देन प्रति
नियतः कश्चित् १ सर्वे वा पदार्थाः २
आद्ये ऽव्याप्तिः द्वितीये असंभवः =
एककारणव्यापित्वं वा ७ अनेक
कारणव्यापित्वविशेषितम्वा
८ एतेषु सिद्धसाधनाप्रसिद्धवि

११

ष्येषणादौ — उत्पत्तिक्षणानन्तरक्ष
णावर्त्तिध्वंसप्रतियोगित्वं वा ९ स्वो
त्पत्तिक्षणानन्तरक्षणावर्त्तिध्वंसप्रति
योगित्वम्वा १० एतद्घटस्यैतद्घटो
त्पत्त्यव्यवहितानन्तरक्षणावर्त्तिध्वंस
प्रतियोगित्वम्वा ११ इतिव्याप्तिलक्ष
णमेतत् — एतदपि न अतीतानाग
तानां सत्तां एतद्रूपत्वाभावात् — उत्प
त्तिक्षणध्वंससमानकालीनत्वं वा न
स्यादिप्रसक्त्यात् स्वपक्षाद्विशेषणे
पूर्वोक्तदोषात् घटत्वादिप्रयुक्तौ
अनागतादिष्वव्याप्तिः एतद्घट
त्वादिप्रयुक्तौ व्याप्यसिद्धिः —
प्रत्यभिज्ञायामाह अन्यत्रालिङ्गलिङ्गि
ययोरन्योन्यनिरपेक्षयोः — इदं सम्य
यक्प्रकारित्वविशिष्टज्ञानमितिप्रति ८
अयं पर्वतो वह्निमानित्यादौ =

लिङ्गानपेक्षलिङ्गिद्वय =

अप्रत्तपाद: इंद्रियार्थसन्निकर्षोत्पन्नं
ज्ञानं मव्यभिचारिप्रत्यक्षम् - तद
व्यभिचारित्वं किमदुष्टसामग्रीजन्य
त्वेनज्ञायते १ किम्वा बाधरहितत्वे
न २ आहोस्वित्सवृत्तिसामर्थ्येन ३
उतान्येन केनचित् ४ तत्राद्ये विक
ल्पः अदुष्टसामग्रीजन्यत्वं प्रत्यक्षेण
ज्ञायते उतानुमानेन नाद्यः अप्र
त्यक्षसामग्र्याः कार्यैकगम्यायादोषा
णांचप्रत्यक्षत्वाभावानन्निष्टदोषा
भावोऽप्यप्रत्यक्षः अतस्तज्जन्यत्वम
पिज्ञानगतमप्रत्यक्षम् द्वितीयेपि
किंविज्ञानत्वलिंगेनानुमीयते कि
म्वाऽव्यभिचारिज्ञानत्वेन नाद्यः
ज्ञानाख्यलिंगेन ज्ञानमात्रेणादुष्टसा
मग्रीजन्यत्वसाध नेविभ्रमज्ञानेष्वनै
कान्तिकत्वात् नद्वितीयः अन्योन्या
श्रयात् कथं अदुष्टकारणजन्यत्वेन
ज्ञानस्याव्यभिचारित्वसिद्धिरव्यभिच
रितज्ञानाच्चादुष्टकारणजन्यत्वसिद्धि

रिति नद्वितीयः तत्रापि सर्वपुरुष
वाधराहित्यमुतप्रतिपत्तिः नाद्यः त
स्यासर्वज्ञाविज्ञेयत्वात् नापिद्वितीयः
प्रतिपत्तुर्देशान्तरगमननिधनादिना
वाधानुदये तदीयमरुमरीचिकावि
भ्रमाणामप्यर्थाव्यभिचरितत्वप्रसंगा
त् अप्रादिपदेनस्वस्यस्यैव ज्ञिज्ञासा
द्यभावोगम्यते– नापि ततीयः तस्या
प्यनिरुक्तेः प्रवृत्तेः कुसक्रोशायाः
फलेनतोयादिना अव्यभिचारत
स्तस्याज्ञनियमः प्रवृत्तिसामर्थ्य
म् तेनोदकादिज्ञानस्यार्थाव्यभि
चारित्वमवगम्यते तच्चेदंप्रवृत्ति
सामर्थ्यज्ञानत्वलिंगेनावगतंस
त्साध्यंवोधयति किंवाऽव्यभिचा
रित्वज्ञानेनावगतम् नाद्यः भ्रांति
स्वप्नादिज्ञानेऽनैकान्तिकत्वात्–

ज्ञानमात्रेः

सा न व्यक्त्योस्तदानैन्त्यान्न जात्योस्तदस
म्भवात्- नत्तैद्वतोरुक्तदोषान्नचतुर्थोऽ
निरूपणात् २ तदानन्त्यादिति प्रमेयत्वा
भिधेयत्वयोर्व्यभिलिंगकृतः सर्वज्ञत्वप्रस
ङ्गात्- तद्वतोरिति जातिविशिष्टव्यक्त्योः-
द्वितीये वृक्षशिंशपयोरिव स्वभावावि
नाभावो वा २ धूमाग्न्योरिव सादेश्यनिय
मो वा वक्तव्यः २ कालकृताविनाभावस्य
जात्यन्तरेणापि साधारण्यात्- तच्चद्वयं
न सम्भवति भिन्नस्वभावत्वात् भिन्नदे
शत्वाच्च-
ननु कतिपयव्यक्तिग्रहणेपि समस्ता जाति
र्गृह्यते परिसमाप्यवृत्तित्वादिति चेन्न
केयं परिसमाप्तिः यदि तत्रैव वर्त्तमान
त्वं तर्हि गतं गवान्तरगोत्वेन अथ पर्य्य
वसिततया प्रतीयमानत्वम् अर्थाभा
वेन तत्प्रमितिके कथमाश्वासः किंच सा किं
व्यक्तिसर्वगता सर्वगता वा अन्त्ये तु [सर्व]
नैकस्यां व्यक्तौ परिसमाप्तिः नहि सर्व
गतायोग्रहोदरे परिसमाप्तिर्वीसवी

नापिद्वितीयः परस्पराश्रयात् किंच
अयमन्वयव्यतिरेकी हेतुः केवलव्य
तिरेकी वा नाद्यः सर्वज्ञानानामव्यभि
चारित्वे विप्रतिपन्नत्वप्रतिसपत्नासम्भ
वात् न द्वितीयः हेतोर्विरुद्धत्वात् दृष्य
ते हि मणिप्रभायां मणिबुद्ध्या प्रवर्त्तमा
नस्य मणिप्राप्तेः प्रवृत्तिसामर्थ्यम् नचा
व्यभिचारित्वम् याहि मणिप्रभायां म
णिबुद्धिः सा तावदर्थव्यभिचारिणी अ
यथार्थत्वात् नच मणिप्रभैव मणिः अ
थ च समर्थप्रवृत्तिजनकत्वमस्ति मणि
प्रापकत्वात् अत्र सौगतवार्त्तिकम्
मणिप्रदीपप्रभयोर्मणिबुद्ध्याभिधाव
तोः - मिथ्याज्ञानाविशेषेपि विशेषोर्थ
क्रियाम्प्रति १ किञ्च कश्चायं फला
भिसम्बन्धः वैशेषिकादिमते विज्ञा
नप्रतिभासितार्थप्रापकत्वम् उत वि
ज्ञानप्रतिभासितार्थसजातीयार्थप्रा
पकत्वं वा २ नाद्यः अव्यापकत्वा
त् यदा हि दूरतरे सरसियः सलिलं

सोगमप्रथोव्यभिचारि समर्थप्रवृत्तिजनकत्वाद्यनैवंतनैवं
प्रथमप्रमाणेभास्वः =

दृष्टान्तयिपासयासर्प्यन्ति तदासमसम
यमेव वृषभेण महिषेण वा तदंभः तो
भितं ततस्तदम्भोवयव्यारम्भकौव
यवेषुक्रियोत्पद्यते ततश्चपूर्वलनद्र
व्यारम्भकसंयोगविघातकविभागो
त्पत्तिस्ततश्चसंयोगनाशस्तदनुचत
दारब्धावयविनाशः उत्तरसंयोगो
त्पत्त्याचावयव्यन्तरोत्पत्तिरितिवैशे
षिकदर्शनम् ततश्चपूर्वज्ञातः सलि
लावयवीविलीनतया पेपीयमानश्चा
न्यएवेति पूर्वज्ञानजनितफललोभि
प्रवृत्तेः फलाभिसम्बन्धेनस्यात्
ऽप्रसिच नदितरथाऽव्यभिचारितया
ऽप्रामाण्यप्रसंगात् न द्वितीयः गृह
नारकादिविज्ञानस्यसजातीयस्यवि
जातीयस्यवाग्रहादेः प्रापकत्वाभावे
नाप्यापकत्वात् पक्षद्वयेपि उपेक्षा
ज्ञानस्यप्रामाण्येनस्यादित्यपिद्रष्ट
व्यम् नापिचतुर्थः अन्यदप्यनुमा
नान्तरमतप्रत्यक्षम् नाद्यः लिङ्गस्या

व्यभिचारितत्वलक्षणसाध्येन व्याप्तिग्र
हणादप्रामाण्यमेवा व्यभिचारस्य गृहीतत्वे
पुनरनुमानोद्योगात् अगृहीतत्वे वानु
मानस्या ~~नुप~~ प्रवृत्तेः न द्वितीयः
सानग्राहकेणैव मानसप्रत्यक्षेण न-
स्यार्थाव्यभिचारित्वग्रहणेऽभ्यासदशा
यामिवानभ्यासदशायामपि संशयानु
दयप्रसङ्गात् किञ्चेदमव्यभिचारित्वं
नामविज्ञानस्य प्रमात्वापरपर्यायाज्जा
तिरुतोपाधिः न तावज्जातिर्जातिस
ङ्करप्रसङ्गात् सर्वधर्मिण्यभ्रान्तं प्रकारे
तु विपर्यय इति वदद्भिरिदं रजतमिति ज्ञा
नमिदमंशे प्रमाणमप्रमाणं च रजतांशे
इति स्मृतेः प्रमात्वाभावेनाप्रमात्वं प्रत्य
क्षादेरप्रमात्वं न प्रमात्वं विभ्रमव्यक्तौ
उभयमिति जातिसंकरः न द्वितीयः
अबाधितत्वं किं सर्वस्य किं वा प्रतिपत्तु
रिति विकल्पोक्तदूषणेन पूर्वोक्तेना
पाकरणीयः प्रमात्वजातिखण्डनम
द्वैततत्त्वरत्ने द्रष्टव्यम् -

वदनसरोरुहं व्याहृतिहिमाहतम्-
संशयलक्षणमपि दुर्भणम् किमनेव

१४ धारणात्मानं संशयः १ विरुद्धोभयकोटि संस्पर्शिज्ञानम्वा २ अनिर्द्धारितविशेषितम्वा ३ जिज्ञासाजनकं मिथ्याज्ञानम्वा ४ विपर्य्ययेतरमिथ्याज्ञानम्वा ५ संशयत्वजातियोगिवा ६

किं ज्ञानमात्रमवधारणम् १ उतैकार प्रतिनियतम् २ आहोस्वित्संशयविरोधिज्ञानम्वा ३ संशयविरोधिप्रमाणज्ञानम्वा ४

आद्ये व्याघातः १ चैत्रो मैत्र इत्यादि प्रमाणज्ञानानामपि संशयत्वापातः द्वि त्वा ×

निरुक्तेः ×

२ संशया ३-४ अनुत्पन्नसंशयस्य जायमानप्रमाणज्ञानमपि संशयः स्यात् - इति च चतुर्थे-

अनिरुक्तेरवधृते इति व्याप्तेर्द्वयो ३ रपि- अनयोर्विभेमाभेदाज्ञो ६ तिसोऽव्याप्यसक्तितः १ अवधृतेरवधारणस्यानिरुक्तेः २ द्वयोरिति पूर्वोक्तयोर्भेदाभेदयोः = अनिर्द्धारितेति निर्द्धारणमवधारणं चेत्पूर्वोक्तदोषः अव्यवस्थि

तत्वंचैतस्य स्वरूपत्वे स्यात्तदेवायंपुरु
षोवायमितिनिश्चयस्यापिसंशयत्वा
पत्तेः - धर्मत्वे यदि अव्यवस्थितत्वं
मपिकोटिद्वयधर्मस्तदातद्विशिष्टकोटि
द्वयकमालोच्यतिव्याप्तिः - आरोपितत्वे
तद्विपर्य्ययेपिप्रसक्तिरिति = नचतु
र्थः अजिज्ञासोरपिस्यात्तदा दोसंश
यदर्शनेनतत्राव्याप्तेः =

किंमिथ्यात्वम् अप्रमात्वम् न
स्मृतावतिव्याप्तेः अर्थव्यभिचारित्वं
म् न अतीतादिज्ञानेव्यतिव्याप्तेः
उपदर्शितार्थाप्रापकत्वम् २ न चेद्
अर्थतारकादिज्ञानेव्यतिव्याप्तेः ३ अर्थ
क्रियाशून्यविषयत्वम्वा ४ न मिथ्या
सर्पदंशजन्यमरणे प्रतिसूर्य्यस्य द
र्पणप्रतिबिम्बितसूर्य्यस्यचप्रकाशादा
वतिव्याप्तेः -
व्यापारः कारणानांहिदृष्टोजन्माऽति
रेकतः ज्ञानेपिहितथाभाव्यदितिजन्मा

१५ अपेयते- अतोजनौव बुद्धेर्व्यापारः-
इंद्रियार्थसन्निकर्षयोरप्रत्यक्षत्वेन
तज्जन्यत्वस्याप्रत्यक्षत्वात् तन्निष्ठ
दोषाग्रहणेन दोषाभावस्याप्यग्राह्य
त्वात् प.३२८ पृ.१ पं.१० पर्यायः इंद्रिया
र्थेति

नयनादीनामज्ञाततया करणत्वे लिं
गशब्दादीनां ज्ञाततया- नालिङ्ग परामर्
शस्यापि ज्ञानस्यैव फलजनकता-नय
नादिवत्ज्ञानस्य निलीनस्यैव स्वरूपक
लजनकताङ्गीकारात् अन्यथाऽनव
स्थाप्रसंगात्- स्वप्रकाशतानं
गीकारे=

ननु केयंव्याप्तिः किमविनाभावः संबं
धः किंवास्वाभाविकः संबंधः किंवा
निरुपाधिकः सम्बन्धः नाद्यः
किंव्यक्त्योरथवाजात्योस्तद्वतोर्वा
विशेषयोः- व्याप्तिस्त्वयेष्यते कि
म्वासाध्यसाधनवत्त्वयोः १